परमात्माऽग्निर्देवता । देवी गायत्री छन्दः । व्याहृतीनां क्रमेण जमदग्निभरद्वाजभृगव ऋषयः । अग्निवायुसूर्या देवताः । दैवी गायत्री दैवी उष्णिक् दैवीबृहत्यश्छन्दांसि सूर्याद्यावाहने विनियोगः । केचित्तत्तन्मन्त्रानप्यावाहने आहुः । तत्र ग्रहपीठमध्ये वर्त्तुले प्राङ्मुखं सूर्यं रक्तपुष्पाक्षतैः आकृष्णेन हिरण्यस्तूपः सविता त्रिष्टुप् । सूर्यावाहने विनियोगः । ॐ आकृष्णेन रजसा । ॐ भूर्भुवः स्वः कलिङ्गदेशोद्भव काश्यपगोत्र सूर्य इहागच्छेह तिष्ठेत्यावाह्य, इह तिष्ठेति स्थापयेत् । एवं सर्वत्र मन्त्रान्ते व्याहृतीरुक्त्वा, इहागच्छेह तिष्ठेति स्थापयेत् । तत आग्नेये चतुरस्रे प्रत्यङ्मुखं सोमं श्वेतपुष्पाक्षतैः । आप्यायस्व गौतमः सोमो गायत्री । यमुनातीरोद्भव आत्रेयगोत्र सोम । ततो दक्षिणे त्रिकोणे दक्षिणामुखं भौमं रक्तपुष्पाक्षतैः । अग्निर्मूर्द्धा विरूपोऽङ्गारको गायत्री । अग्नि । अवन्तीसमुद्भव भारद्वाजगोत्र भौम । तत ईशाने बाणाकारे बुधमुदङ्मुखं पीतपुष्पाक्षतैः, उद्बुध्यध्वं बुधः सौम्यो बुधस्त्रिष्टुप् । मगधदेशोद्भव आत्रेयसगोत्र बुध । तत उत्तरतो दीर्घचतुरस्रे उदङ्मुखं बृहस्पतिं पीतपुष्पाक्षतैः बृहस्पते गृत्समदो बृहस्पतिस्त्रिष्टुप् । सिन्धुदेशोद्भव आङ्गिरसगोत्र बृहस्पते । ततः पूर्वे पञ्चकोणे प्राङ्मुखं शुक्रं शुक्लपुष्पाक्षतैः । शुक्रः पाराशरो द्विपदा विराट् । भोजकटदेशोद्भव भार्गवसगोत्र शुक्र । ततः पश्चिमे धनुषि प्रत्यङ्मुखं शनिं कृष्णपुष्पाक्षतैः शमग्निरिरिंबिटिः शनिरुष्णिक् । सौराष्ट्रज काश्यपसगोत्र शनैश्चर । ततो नैर्ऋत्ये शूर्पाकारे दक्षिणामुखं राहुं कृष्णपुष्पाक्षतैः । कया नो वामदेवो राहुर्गायत्री । राह्वावाहने । राठिनापुरोद्भव पैठीनसिगोत्र राहो । ततो वायव्ये ध्वजाकारे दक्षिणामुखं केतुं धूम्रपुष्पाक्षतैः केतुं मधुच्छन्दाः केतवो गायत्री । अन्तर्वेदिसमुद्भव जैमिनिसगोत्र

केतो । सर्वे वा आदित्याभिमुखाः ॥ अथाऽधिदेवताः । श्वेत- पुष्पाक्षतैः क्रमात् सूर्यादीनां दक्षिणतः स्थाप्याः।त्र्यम्बकं वसिष्ठो रुद्रोऽनुष्टुप् । त्रिनियोगः सर्वत्र ज्ञेयः । ॐ त्र्यम्बकम् । ॐ भूर्भुवः स्वः ईश्वरः गौरीर्मिमाय दीर्घतमा उमा जगती । सोमदक्षिणे । यदक्रन्दो दीर्घतमा स्कन्दस्त्रिष्टुप् । विष्णोर्दीर्घतमा विष्णुस्त्रिष्टु- प् । ब्रह्मजज्ञानं गौतमो वामदेवो ब्रह्मा त्रिष्टुप् । इन्द्रं वा मधु- च्छन्दा इन्द्रो गायत्री । यमाय सोमं यमो यमोऽनुष्टुप् । मोषुणो घोरः काण्वः कालो गायत्री । उषोवाजं स्कण्वश्चित्रगुप्तो बृहती१ एवमेव शुक्लपुष्पाक्षतैर्ग्रहाणां वामतो मन्त्रान्ते व्याहृतीरुच्चार्य इहा- ऽऽगच्छेह तिष्ठेति चोक्त्वा प्रत्यधिदेवताः स्थापयेत् । अग्निं काण्वो मेधातिथिरग्निर्गायत्री । ॐम् अग्निं दूतम् । अप्सुमे मेधातिथि एषो- ऽनुष्टुप् । स्योना मेधातिथिर्भूमिर्गायत्री । इदं विष्णुर्मेधातिथि- र्विष्णुर्गायत्री। इन्द्रश्रेष्ठानि गृत्समद इन्द्रस्त्रिष्टुप् । इन्द्राणीं वृषा- कपिरिन्द्राणी पङ्क्तिः।प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् । आयं गौः सार्पराज्ञी सर्पा गायत्री । ब्रह्मजज्ञानं गौतमो वामदेवो ब्रह्मा त्रिष्टुप् । ततः शुक्लपुष्पाक्षतैर्विनायकादीन् पञ्च । गणानां त्वा गृत्समदो गणपतिर्जगती । राहोरुत्तरतो विनायकम् । जातवेदसे कश्यपो दुर्गा त्रिष्टुप् । शनेरुत्तरतो दुर्गां तव वायव्यश्च आङ्गिरसो वायुर्गायत्री । रवेरुत्तरतो वायुम् । एतान् मन्त्रान् पठन्ति सांप्रदा- यिकाः । तत्र केषुचिन्मन्त्रेषु मूलं चिन्त्यम् । आदित्प्रत्नस्य वत्स आकाशो गायत्री । राहोर्दक्षिणे आकाशम् । एषो उषा प्रस्कण्वो- ऽश्विनौ गायत्री । अश्विनाविहागच्छतमिह तिष्ठतामिति केतो- र्दक्षिणेऽश्विनौ । एतानि विनायकादिस्थानानि चिन्तामणौ । विनायकादीन् पञ्च उत्तरत एवेति संप्रदायः।इति द्वात्रिंशद्देवता इति रूपनारायणादयः । हेमाद्रौ तु लोकपालादीनामपि सूर्याऽभि-

मुखानां दिक्षु स्थापनमुक्तम् । तद्यथा । इन्द्रं विश्वाजेता माधुच्छन्दस इन्द्रोऽनुष्टुप् । इन्द्र इहागच्छेह तिष्ठेति पूर्वे इन्द्रमेवमुत्तरत्र। अग्निं काण्वो मेधातिथिरग्निर्गायत्री । यमाय सोमं यमो यमोऽनुष्टुप् । मोषुणो घोरः काण्वो निर्ऋतिर्गायत्री । त्वं नो अग्ने वामदेवो वरुणस्त्रिष्टुप् । तव वायो व्यश्वो वायुर्गायत्री । सोमो धेनुं गौतमः सोमस्त्रिष्टुप् । तमीशानं गौतम ईशानो जगती । सहस्रशीर्षा नारायणोऽनन्तोऽनुष्टुप् । ईशानपूर्वयोर्मध्येऽनन्तम् । ॐ ब्रह्मजज्ञानं गौतमो वामदेवो ब्रह्मा त्रिष्टुप् । नैर्ऋत्यपश्चिमयोर्मध्ये ब्रह्माणम् । अथ वस्वाद्येकादश देवताः । ज्मया अत्र मैत्रावरुणो वसिष्ठो वसवस्त्रिष्टुप् । इन्द्राग्निमध्ये । ध्रुवाऽध्वरसोमावनिलानलप्रत्यूषप्रभासाख्यानष्टौ वसून् । त्यान्नु क्षत्रियाँ इति त्यान्तु स्सामदो मत्स्यो द्वादशादित्या गायत्री । इन्द्रेशानमध्ये । धात्रर्यममित्रवरुणांशभगेन्द्रविवस्वत्पूषपर्ज्जन्यत्वष्टृजघन्याजघन्ययविष्ठाख्यान् द्वादशादित्यान् । आरुद्रासः श्यावाश्व एकादश रुद्रा जगती । अग्नियममध्ये । वीरभद्रशम्भुमहाशयायुतगिरिशाऽजैकपादहिर्बुध्न्याऽपराजितपिनाकिभुवनाधीश्वरविद्रूपतिकपालिस्थाभगवद्भगाख्यान् एकादश रुद्रान् । गौरीर्मिमाय दीर्घतमा गौर्यादयो जगती । गौरीपद्माशचीमेधासावित्रीविजयाजयादेवसेनास्वधास्वाहामातृलोकमातृधृतिपुष्टितुष्ट्यात्मकुलदेवताख्याः षोडशमातॄः । निर्ऋतिवरुणमध्ये गणपतिं, गणानां त्वा गृत्समदो गणपतिर्जगती । मरुतोयस्यराहूगणोगौतमो मरुतो गायत्री । वायुसोममध्ये, आवहप्रवहोद्वहसंवहविवहपरावहपरिवहानिलाख्यान् सप्त मरुतः । वेद्यामेव यथावकाशं ब्रह्मादीन् पञ्च स्थापयेत् । ब्रह्मजज्ञानं गौतमो वामदेवो ब्रह्मात्रिष्टुप् । इदं विष्णुर्मेधातिथिरच्युतो गायत्री । कद्रुद्राय घोरः कण्व ईशानो गायत्री । अग्निरश्मिविश्वामित्रोऽर्कस्त्रिष्टुप् । वनस्पते गर्गो वनस्पतिस्त्रिष्टुप् । एवं

प्रतिष्ठाप्य पूजयेत् षोडशोपचारैः । पूजा च तत्तद्वर्णैर्गन्धपुष्प-वासोभिस्तत्तन्मन्त्रैः । एवं सूर्यादिद्वात्रिंशत् दश दिक्पालान् वस्वादीनेकादश चावाह्य संस्थाप्य पञ्चभिः षोडशभिर्वोपचारैः संपूजयेत् । तत्र वस्त्राणि ग्रहवर्णानि । रविभौमयो रक्तचन्दनम् । चन्द्रशुक्रयोः श्वेतचन्दनम् । बुधगुर्वोः कुङ्कुमयुतम् ॥ शनिराहुकेतूनां कृष्णागुरुम् । पुष्पाणि तद्वर्णानि । धूपास्तु, सल्लकीनिर्यासं घृताक्तयवान् रालमगुरुम् । सिह्लकं बिल्वयुतागुरुम् । गुग्गुलुम् । लाक्षाम् । लक्षाः । क्रमाद् गायत्र्या दत्वा, उद्दीप्यस्वेति सर्वेभ्यो दीपान् दत्वा गुडौदनं पायसं नीवारौदनं क्षीरयुतषष्ठिकौदनं दध्योदनं घृतौदनं तिलमाषयुतमोदनं मांसौदनं चित्रौदनं च क्रमान्निवेदयेत् । अधिदेवतादिभ्यस्तु वासोगन्धपुष्पाणि श्वेतानि गुग्गुलुर्धूपः । नैवेद्यं पायसादि यथालाभम् । सूर्यादिद्वात्रिंशतामन्येषां च सर्वेषां पूजापदार्थानुसमयेनैव । ततो ग्रहवेदीशान्यां कलशं संस्थाप्य । तत्र वरुणमावाह्य संपूज्याभिमन्त्रयेत् । तद्यथा, कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः । अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा ॥ आयान्तु यजमानस्य दुरितक्षयकारकाः । देवदानवसंवादे मथ्यमाने महोदधौ ॥ उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् । त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ॥ त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः । शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ॥ आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः । त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ॥ त्वत्प्रसादादिमं यज्ञं कर्त्तुमीहे जलोद्भव । सान्निध्यं

कुरु मे देव प्रसन्नो भव सर्वदेति ॥ ततः फलपुष्पमालाशोभितं वितानं बृहस्पतिदैवत्यं सूर्यादिभ्य इदं न ममेति उत्सृज्य ग्रहवद्युपरि बध्नीयात् ॥ तत एको होता परो ब्रह्मेति पूर्वकुण्डे द्वौ ऋत्विजौ दक्षिणादिकुण्डेषु यथाशाखं होमात् प्राक्तनं कर्म कुर्युः। तत्र षोडशमहादानादौ प्रागादिक्रमेण ऋग्वेदादिविहितं कर्म-जलाशयोत्सर्गादौ पञ्चकुण्डीपक्षेऽप्येवम्। तत्राचार्यकुण्डं त्वीशानपूर्वयोर्मध्ये वृत्तं चतुरस्रं वा तत्रैव नवकुण्ड्यामप्येवमेवाचार्यकुण्डम्। तस्मिन् विदिक्कुण्डेषु च चतुःपञ्चकुण्डीवद्धोमावृत्तिरिति केचित्। युक्तं तु चतुःकुण्डीहोम एव विभज्य कार्य इति। तदा चैको होता परो ब्रह्मेति। विदिक्कुडचतुष्टये अष्टौ अधिका ऋत्विजः। ते त्वाग्नेयादिकोणक्रमेण ऋगादिशाखीया इति केचित्। अनियता इत्यपरे। आचार्यकुण्डं तु प्रणयनयोग्याग्निस्थापनार्थमिति साम्प्रदायिकाः। होमावृत्तिर्विभज्य होमानुष्ठानं वेति परे ॥

अथ ऋक्शाखीयानामन्वाधाने विशेषः। तत्र चक्षुषी आज्येनेत्यन्तमुक्त्वात्र प्रधानं सूर्यसोमभौमबुधगुरुशुक्रशनिराहुकेतून् ग्रहान् समिच्चर्वाज्यैः प्रतिद्रव्यम्। अष्टसहस्राऽष्टशताऽष्टाविंशत्यष्टान्यतमसंख्यायाः ईश्वरोमास्कन्दविष्णुब्रह्मेन्द्रयमकालचित्रगुप्ताख्या अधिदेवताः । अग्न्यब्भूमिविष्णिवन्द्रेन्द्राणीसर्पप्रजापतिब्रह्माख्याः प्रत्यधिदेवताः। विनायकदुर्गावाय्वाकाशाख्यान् पञ्चलोकपालान् इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानानन्तब्रह्माख्यदशदिक्पालान् ध्रुवाध्वरसोमापानिलानलप्रत्यूषप्रभासाख्यान् अष्टौ वसून् धात्रऽर्यममित्रवरुणांशभगेन्द्रविवस्वत्पूषपर्जन्यत्वष्टृविष्ण्वाख्यान् द्वादशादित्यान्, वीरभद्रशम्भुगिरिशाजैकपादहिर्बुध्न्यपिनाकिभुवनाऽधीश्वरकपालिविशाम्पतिस्थाणुभगाख्यान् एकादशरुद्रान्, आवहप्रवहोद्वहसंवहविवहपरावहपरिवहाख्यान् सप्त मरुतः, ब्रह्माच्युते-

शार्कवनस्पतीन् पञ्च चामुकसंख्यया समिच्चर्वाज्यैर्यक्ष्य इति।वसू-
न् आदित्यान् रुद्रान् मरुत इति समुदितानामेवोल्लेखो युक्त इति
बहवः । अत्र ग्रहहोमसंख्यातोऽधिदेवताहोमेन्यूनसंख्येति सम्प्र-
दायः। ततो यजमानो मण्डपमध्ये दक्षिणत उपविष्ट आघारा-
ऽऽज्यभागदेवता अन्वाधानोक्तप्रधानदेवताः स्विष्टकृदाद्युत्तराङ्ग-
देवताश्चतुर्थ्यन्तेनादिश्यैताभ्य एतानि समित्तिलचर्वादिद्रव्याणि
होतुमुत्सृज्य इति सजेत् । बहुकर्तृके होमे प्रत्याहुतित्यागस्याश-
क्यत्वादिति प्रयोगविदः। ततो होतारः स्वस्वशाखीयैः प्रणवाद्यैः
स्वाहान्तैस्तत्तन्मन्त्रैर्ऋषिदेवताछन्दःस्मरणपूर्वकं सूर्यादिभ्यः स-
मिच्चर्वाज्यादि जुहुयुः। तत्र वस्वादित्यरुद्रमरुतां प्रत्येकं मन्त्रा-
ऽभावात् प्रणवादिना चतुर्थीस्वाहान्तेन प्रत्येकं होम इति केचित्।
समुदितानामेव विधौ श्रवणात् मन्त्रानुरोधाच्चेति तूक्तम्। तत्र प्र-
त्येकदेवतात्वपक्षे पञ्चाशीतिर्देवताः । समुदितपक्ष एकपञ्चाशत्।
होमकाले ऋग्वेदिनौ द्वारपालौ पूर्वे द्वार उदङ्मुखौ रात्रिसूक्तं
रौद्रं पवमानं सुमङ्गलं शन्न इन्द्राग्नी इति सूक्तानि पठेताम्। यजु-
र्विदौ दक्षिणे शाक्रं रौद्रं सौम्यं कौष्माण्डम् ऋचं वाचामित्यध्यायं
च पठेताम् । पश्चिमे सामविदौ सुपर्णं विराजमाग्नेयं रुद्रसंहितां
ज्येष्ठ सामर बोधयेति च पठेताम्। उत्तरेऽथर्ववेदिनौ सौरं शाकु-
नकं पौष्टिकं सुमहाराजं, शन्न इन्द्राग्नी इति ऋक्त्रयं च पठेताम्।
अथ तत्तद्दैवत्यानि सूक्तानि जप्यानि । ह्वयामीत्येकादशर्चस्य
सूक्तस्य हिरण्यस्तूप ऋषिः सविता देवताऽऽद्यायाः पादत्रये-
ऽग्निमित्रावरुणौ रात्रिश्च देवता त्रिष्टुप्छन्दः आद्यनवम्योर्जगती
सूर्यप्रीतये जपे विनियोगः।ह्वयाम्यग्निं देवम् । ११ । त्वं सोमेति
त्रयोदशर्चस्य सूक्तस्य गौतम ऋषिः सोमो देवता । पञ्चम्यादि-
द्वादश गायत्र्यः सप्तदश्युष्णिक् शेषास्त्रिष्टुभः सोमप्रीतये जपे वि-

नियोगः । त्वं सोम गविष्ठौ । समिधाग्निमिति त्रिंशर्चस्य सूक्तस्य विरूप अङ्गिरसोऽग्निर्गायत्री । भौमप्रीतये । समिधाग्निं सोतिर । उद्बुध्यध्वमिति द्वादशर्चस्य सूक्तस्य बुधो विश्वेदेवा नवमी द्वादशी च जगती पञ्चमी बृहती चतुर्थी षष्ठी च गायत्री शेषास्त्रिष्टुभो बुधप्रीतये उद्बुध्यध्वम् । यस्तस्तम्भेत्येकादशर्चस्य वामदेवो नवानां बृहस्पतिरन्त्ययोरिन्द्राबृहस्पती दश त्रिष्टुभ उपान्त्या जगती । बृहस्पतिप्रीतये यस्तस्तम्भ मरातीः । शुक्रं त इति चतसृणां भरद्वाजः पूषा त्रिष्टुप् द्वितीया जगती । शुक्रप्रीतये । शुक्रं ते अन्यत्तसम्बम् । आपो हिष्ठेति नवर्चस्याम्बरीषसिन्धुद्वीप आपः सप्त गायत्र्यः पञ्चमी वर्द्धमाना सप्तमी प्रतिष्ठान्त्ये द्वे अनुष्टुभौ । शनिप्रीतये० । आपो हिष्ठा वर्चसा । कया न इति पञ्चदशर्चस्य वामदेव इन्द्रो गायत्री तृतीया पादनिवृत् । राहुप्रीतये० । कया नश्चित्र० मित्रोपरि । युञ्जन्तीति दशर्चस्य मधुछन्दा आद्यानां तिसृणां चतुर्थी षष्ठ्यष्टमीनां मरुतो गायत्री । केतुप्रीतये० । युञ्जन्ति ब्रध्नं रजस० ॥ इति नवग्रहसूक्तानि ।

अथ होममन्त्राः । तत्र ऋग्वेदि अथाधिदेवतानाम् । इमा रुद्रायेत्येकादशर्चस्य कुत्सो रुद्रो जगती अन्त्ये त्रिष्टुभे रुद्रप्रीतये । इमा रुद्राय तद्यौः । आपो हिष्ठेति नवर्चं पूर्ववत् । उमाप्रीतये । आपो हिष्ठा० वर्चसा । प्रातर्युजेत्येकविंशत्यृचसूक्तस्य मेधातिथिराद्यानां चतसृणामश्विनौ चतसृणां सविता द्वयोरग्निरेकादश्या देव्यो द्वादश्या इन्द्राणी वरुणान्याग्नेय्योर्द्वयोर्द्यावापृथिव्यौ पञ्चदश्याः पृथिवी षण्णां विष्णुर्गायत्री । स्कन्दप्रीतये । प्रातर्युजा० पदम् । अतो देवा इति षण्णां मेधातिथिर्विष्णुर्गायत्री । हरिप्रीतये० । अतो देवा० पदम् । अग्न आयाहीति विंशत्यृचस्य सूक्तस्य भर्गोऽग्निः प्रगाथः ब्रह्मप्रीत्यर्थे० । अग्न आयाह्यग्निभिः स्विनः ।

इन्द्रं विश्वा इत्यष्टर्चस्य जेता माधुछन्दस इन्द्रोऽनुष्टुप् । इन्द्रप्रीतये० ।इन्द्रं विश्वा० पतीः। आयं गौरिति तिसृणां सार्पराज्ञ्यात्मा गायत्री यमप्रीतये० । आयं गौः पृश्नि० द्युभिः । परं मृत्योरिति चतसृणां संकुशुको मृत्युस्त्रिष्टुप् । कालप्रीतये०।परं मृत्यो० तेन । सचित्रेत्यस्य भरद्वाजो मरुतस्त्रिष्टुप् । चित्रगुप्तप्रीतये०। सचित्र चित्रं० युवस्व० ॥

अथ प्रत्यधिदेवतानाम् । अग्निं दूतमिति द्वादशर्चस्य मेधातिथिरग्निः षष्ठ्या आद्ये पादे निर्मथ्याहवनीयौ गायत्री । अग्निं दूतम् ।स्वनः। कस्येति पञ्चदशर्चस्याजीगर्त्तः शुनःशेप । आद्यायाः को द्वितीयाग्निस्तिसृणां सविता दशानां वरुणस्तृतीयास्तिस्रो गायत्र्यः शेषास्त्रिष्टुभः । अप्प्रीतये० । कस्य नूनम् । स्योना मेधातिथिः पृथिवी गायत्री । भूमिप्रीतये० । स्योना पृथिवि० प्रथः । सहस्रशीर्षेति षोडशर्चस्य नारायणः पुरुषोऽनुष्टुबन्त्यात्रिष्टुप् विष्णुप्रीतये । सहस्रशीर्षा० देवा०।इन्द्राय कश्यपः पवमानसोमो गायत्री । इन्द्रप्रीतये० । इन्द्रायेन्दो सदं० । इमां खनामीति षण्णाम् इन्द्राणीन्द्राण्यनुष्टुभं त्वन्त्या पञ्चपदा पङ्क्तिः । इन्द्राणीप्रीतये० । इमां खनामि० धावतु । प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् प्रजापतिप्रीतये० । प्रजापते० रयीणाम् । कालिको वसिष्ठः सर्पा अनुष्टुप् । सर्पप्रीतये । कालिको नाम सर्पः ह नः । ब्रह्मा देवानां दैवोदासिः प्रतर्दनो ब्रह्म त्रिष्टुप् ब्रह्मप्रीतये० । ब्रह्मा० रेभम् ॥

अथविनायकादिपञ्चानाम् । आतून इति नवानां कुसीदः काण्वो गणपतिर्गायत्री । विनायकप्रीतये । आतून इन्द्र० रन्तो । जातवेदसे कश्यपो जातवेदा त्रिष्टुप् । दुर्गाप्रीतये० । जातवेदसेऽग्निः । ऋणी त्रितो वा पुरु उष्णिक् वायुप्रीतये० । ऋणी

शिशुद्धिता.। आदिंद्रस्स आकाशो गायत्री । आकाशप्रीतये० । आदित्प्रत्नस्य० । एषो उषा प्रस्कण्वोऽश्विनौ गायत्री । अश्विनोः प्रीतये० । एषो० हव ॥

अथ दशलोकपालानाम् । इन्द्रं विश्वेत्यष्टानां जेता मधुच्छन्दस इन्द्रोऽनुष्टुप् । इन्द्रप्रीतये० । इन्द्रं विश्वा० पती । अग्निः सप्ति-मिति सप्तानां सौचीकोऽग्निर्वैश्वानरोऽग्निस्त्रिष्टुप् । अग्निप्रीतये। अग्निः सप्तिः जस्व । परेयिवांसमिति षोडशर्चस्य यमः पञ्चानां यमः षष्ठ्या अङ्गिरसास्तिसृणां श्वानौ चतसृणां यमो द्वादशत्रि-ष्टुभौ पादनिवृतौ पञ्चदशी बृहती षोडशी अनुष्टुप् । यमप्रीत-ये । परेयिवांसं० हिता। वेत्था हि विश्वमाना वै पश्चो निर्ऋति-प्रीतये । वेत्था हिमित्र । मोष्विति । पञ्चानां वसिष्ठो वरुणो गायत्री । अन्त्या जगती । वरुणप्रीतये । मोषुवरुणोरीरिषः । वात इति तिसृणां वातायन उलो वायुर्गायत्री० । वायुप्रीतये० । वात आवातु० सीवसे० । त्वं सोमेति ग्रहवत् । इमा रुद्रायेति पूर्ववत् । सहस्रशीर्षेति प्राग्वत् । त्वमिदग्र्भोऽग्निर्बृहती ब्रह्मप्रीतये । त्व-मित्सप्रथा० घसः ॥

अथ वस्त्रादिनवानाम् । इमया अत्रेति वसूनां होमवत् । इमा गिर इति सप्तदशर्चस्य गार्त्समदः कूर्म आदित्यास्त्रिष्टुप् । आदित्यप्रीतये । इमा गिरः वीराः । आत इति पञ्चदशर्चस्य गा-र्त्समदः कूर्मरुद्रस्त्रिष्टुप् । ईशानप्रीतये० । आतोपित० वीराः । मरुतो यस्येति दशानां गौतमो गायत्री । मरुत्प्रीतये० । मरुतो यद्यं० । इमासि० । हिरण्यगर्भ इति दशर्चस्य हिरण्यः प्रजापतिः कस्त्रिष्टुप् ब्रह्मप्रीतये । हिरण्यगर्भः रयीणाम् । सहस्रशीर्षेत्यच्यु-तस्य प्राग्वत् । आतेपितररितीशस्य प्राग्वत् । चित्रमिति षण्णां कुत्सकस्त्रिष्टुप् । अर्कप्रीतये। चित्रं देवानाम्० उत द्यौः । वनस्पत

इति तिसृणां गर्गो वनस्पतिस्त्रिष्टुप् । वनस्पतिप्रीतये । वनस्पते वीडूवङ्गो गृभाय । आवाहितयोरपि मातृगणपत्योर्होमसूक्तजपौ नस्तः । एवं ऋग्वेदी हुत्वा स्विष्टकृदादिमायश्चित्त्यन्तं पूर्णाहुतिमागृभावि कर्म कुर्यात् । अथ यजुर्वेदिनः कुशकण्डिकानन्तरं प्रधानहोममन्त्राः । आकृष्णेन हिरण्यस्तूपः सविता त्रिष्टुप् । सूर्यप्रीतये तिलाज्यहोमे विनियोगः । आकृष्णेन पश्यन् स्वाहा । इदं सूर्याय । एवं सर्वत्र । इमं देवा वरुणः । सोमो यजुः । इमं देवानां० राजा । अग्निर्मूर्द्धाविरूपोऽङ्गारको गायत्री । उद्बुध्यस्व परमेष्ठी बुधस्त्रिष्टुप् । बृहस्पते गृत्समदो बृहस्पतिस्त्रिष्टुप् । अन्नात्प्रजापतिराश्विसरस्वतीन्द्राः शुक्रो जगती । शन्नो दध्यङ्ङाथर्वणशनिर्गायत्री । कया नो वामदेवो राहुर्गायत्री । केतुं मधुच्छन्दाः केतवो गायत्री ॥

अथाधिदेवतानाम् । त्र्यम्बकं वसिष्ठो रुद्रस्त्रिष्टुप् । अत्र प्रणीतोदकं स्पृशेत् । श्रीश्चेत्युत्तरनारायण उमा त्रिष्टुप् । यदक्रन्दो भास्करजमदग्निदीर्घतमाः स्कन्दास्त्रिष्टुप् । विष्णोरराटमुतथ्यो विष्णुर्यजुः । विष्णोरराटम् । वे त्वा । आ ब्रह्मन् प्रजापतिर्ब्रह्मा यजुः । आ ब्रह्मन्० कल्पताम् । सजोषा विश्वामित्र इन्द्रस्त्रिष्टुप् । सजोषा इन्द्रः । असियमो भास्करजमदग्निदीर्घतमसो यमास्त्रिष्टुप् । अत्र प्रणीतोदकं स्पृशेत् । कार्षिरसि दध्यङ्ङाथर्वणः कालोऽनुष्टुप् । अत्रापि प्रणीतोदकस्पर्शः । चित्रापि प्रणीतोदकस्पर्शः । चित्रावसोर्ऋषयश्चित्रगुप्तो जगती चित्रावसोः शीय० ॥

अथ प्रत्यधिदेवतानाम् । अग्निं दूतेति विरूपोऽग्निर्गायत्री । अप्स्वन्तर्बृहस्पतिः आपः पुर उष्णिक् । स्योना मेधातिथिः पृथिवी गायत्री । इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री । त्रातारं गार्ग्य इन्द्रस्त्रिष्टुप् । अदित्यै दध्यङ्ङाथर्वण इन्द्राणी यजुः । अदित्यै रास्ना

ष्णीषः । प्रजापते वरुणः प्रजापतिस्त्रिष्टुप् । नमोऽस्तु देवाः सर्पा अनुष्टुप् । ब्रह्म प्रजापतिर्ब्रह्मा त्रिष्टुप् । अथ विनायकादिपञ्चानाम् । गणानां प्रजापतिर्गणपतिर्यजुः । गणानां त्वा । मम । अम्बे प्रजापतिर्दुर्गाऽनुष्टुप् । वातो वा गन्धर्वा वात उष्णिक् । ऊर्ध्वा अस्य समिधो प्रजापतिराकाश उष्णिक् । अश्विनौ अश्विनौ यजुः । अश्विनोर्भैवाभि ॥

अथ दिक्पालानाम् । त्रातारं गार्ग्य इन्द्रस्त्रिष्टुप् । अग्निं दूतं विरूपोऽग्निर्गायत्री । असियमो भार्गवजमदग्निर्दीर्घतमसो यमस्त्रिष्टुप् । अत्र प्रणीतोदकस्पर्शः । एष ते वरुणो निर्ऋतिर्यजुः । एष ते निर्ऋते ० षस्व । प्रणीतोदकस्पर्शः । इमं मे शुनःशेपो वरुणो गायत्री । इमं मे वरुण० । वातो वा गन्धर्वा वात उष्णिक् । वयं बन्धुः सोमो गायत्री । तमीशानं गौतम ईशानो जगती । प्रणीतोदकस्पर्शः । नमोऽस्तु देवा अनन्तोऽनुष्टुप् । ब्रह्मप्रजापतिर्ब्रह्मा त्रिष्टुप् ॥

अथ वस्वादीनाम् । स्वर्गा देवा वसवस्त्रिष्टुप् । यज्ञो देवानां कुत्स आदित्यस्त्रिष्टुप् । य एतावन्तश्च परमेष्ठी रुद्रोऽनुष्टुप् । मरुतो यस्य गौतमो मरुतो गायत्री । आब्रह्मन् प्रजापतिर्ब्रह्मा यजुः । इदं विष्णुर्मेधातिथिरच्युतो गायत्री । मानस्तोके कुत्स ईशो जगती । चित्रं देवानां कुत्सोऽर्कस्त्रिष्टुप् । अयं हि प्रजापतिर्वनस्पतिर्यजुः । अयं हि त्वा रुहेम ॥ इति होममन्त्राः ॥

अथ जपसूक्तानि । विभ्राडिति सप्तदशर्चस्यानुवाकस्य आद्याया विभ्राट् । ततस्तिसृणां प्रस्कण्वः । पञ्चम्या अवत्सारः काश्यपः षष्ठ्या वेनः सप्तम्याः कुत्सोऽष्टम्या अगस्त्यो नवम्याः शुनकसुकक्षौ दशम्याः प्रस्कण्वोऽथ द्वयोर्जमदग्निः पञ्चदश्या नृमेधः । षोडश्याः कुत्सः । अन्त्याया हिरण्यस्तूप आङ्गिरसः । पञ्चम्या विश्वेदेवाः । षष्ठ्याः सोमोऽन्यासां सूर्य आद्या पञ्चमी

जगती, द्वितीयादितिस्रो नवमी दशमी च गायत्र्यस्त्रयोदशीपञ्च-दश्यौ पथ्याबृहत्यौ। चतुर्दशी सतो बृहती। शेषाः सप्त त्रिष्टुभः। सूर्यप्रीतये जपे विनियोगः। ॐ विभ्राड्बृहत् पश्यन् आषाढं युत्स्विति चतसृणां गौतमः सोमस्त्रिष्टुप्। सोमप्रीतये ०। आषाढं युत्सु० त्रिष्टौ। अग्निर्मूर्द्धा विरूपाक्षोऽग्निर्गायत्री। उद्बुध्यस्व परमेष्ठ्यग्निस्त्रिष्टुप्। बुधप्रीतये। बृहस्पते अतिगृत्समदो ब्रह्मा त्रिष्टुप्। बृहस्पतिप्रीतये०। अन्नात् परिस्रुतः प्रजापत्यश्विसरस्वतीन्द्रा इन्द्रो जगती। शन्नो देवी दध्यङ्ङाथर्वण आपो गायत्री। केतुं कृण्वन् मधुच्छन्दा अग्निर्गायत्री। एते मन्त्रा एव सूक्तानि॥

अथाऽधिदेवतानाम्। षट्षष्टिमन्त्रात्मकरुद्राध्यायस्य परमेष्ठी ऋषिः। आद्यानां षोडशानाम् एकरुद्रस्ततो बहुरुद्र आद्यो गायत्री। तिस्रोऽनुष्टुभो द्वे जगत्यौ। नमो हिरण्यबाहव इत्यन्तास्त्रिंशद्यजूंषि द्राप इत्युपरिष्टाद् बृहती, इमा रुद्रायेति जगती, या ते रुद्रेत्यनुष्टुप्। ततो द्वे त्रिष्टुभौ। विकिरिदेत्याद्या द्वादशानुष्टुभः। शेषाणि त्रीणि यजूंषि। रुद्रप्रीतये०। नमस्ते रुद्र० दधमः। ६६। इत्रामह इत्यन्ताः षोडशैव रुद्रसूक्तमिति रूपनारायणीये। प्रणीतोदकस्पर्शः। श्रीश्च ते उत्तरनारायणो नारायणास्त्रिष्टुप्। उमाप्रीतये। यदक्रन्दो भार्गवजमदग्निदीर्घतमसोऽश्वास्त्रिष्टुप्। स्कन्दप्रीतये। सहस्रशीर्षेति षोडशानां नारायणः। पुरुषोऽनुष्टुबन्त्या त्रिष्टुबन्त्यास्त्रिष्टुप्। विष्णुप्रीतये०। आब्रह्मन्निति प्रजापतिर्ब्रह्मा यजुः। ब्रह्मप्रीतये०। आशुः शिशानमिति द्वादशानामप्रतिरथ इन्द्रास्त्रिष्टुप्। इन्द्रप्रीतये ०। प्रणीतोदकस्पर्शः। चित्रावसो ऋषयो रात्रिर्जगती। चित्रगुप्तप्रीतये०॥

अथ प्रत्यधिदेवतानाम्। अस्या जरास इति सप्तदशर्चस्य आद्याया वत्सप्री इन्द्रवायू त्रिष्टुप्। द्वितीया विरूप इन्द्रवायू गा-

यत्री। तृतीया गौतमो मित्रावरुणौ गायत्री। चतुर्थ्या विरूप इन्द्र-वरुणौ गायत्री। पञ्चम्याः कुत्सः शुक्रस्त्रिष्टुप्। षष्ठ्या वामदेवो-ऽग्निर्जगती। सप्तम्या विश्वामित्र इन्द्राग्नी त्रिष्टुप्। अष्टम्या भर-द्वाजोऽग्निस्त्रिष्टुप्। नवम्या भरद्वाजो विश्वेदेवा गायत्री। दश-म्या मेधातिथिरग्निर्गायत्री। एकादश्याः शक्त्यः पाराशरो मरुत-स्त्रिष्टुप्। द्वादश्या अत्रिदुहिता विश्वेदेवा मरुतस्त्रिष्टुप्। त्रयो-दश्या भरद्वाजोऽग्निस्त्रिष्टुप्। चतुर्दश्या वसिष्ठ आदित्यो बृहती। षोडश्यो वामदेवोऽग्निस्त्रिष्टुप्। सप्तदश्याऽनुरोधातकः सविता त्रिष्टुप्। अग्निप्रीतये०। आपो हिष्ठेति तिसृणां सिन्धुद्वीप आपो गायत्री। अप्प्रीतये०। स्योना पृथिवि दध्यङ्ङाथर्वण ऋषिः। पृथिवि दध्यङ्ङाथर्वणः पृथिवी गायत्री। पृथिवीप्रीत्यर्थे०। सहस्रशीर्षा नारायणीयः पुरुषस्त्रिष्टुप्। विष्णुप्रीत्यर्थे। आशुः शिशानो द्वादशानामप्रतिरथम्। इन्द्रस्त्रिष्टुप्। इन्द्रप्रीत्यर्थम्०। अदित्यै रास्ना दध्यङ्ङाथर्वण इन्द्राणी यन्तु इन्द्राणी प्राहिरण्यगर्भ इति चतुर्णां हिरण्यगर्भः प्रजापतिस्त्रिष्टुप्। प्रजापतिप्रीत्यर्थम्। नमोऽस्तु सर्पेभ्य इति तृचस्य देवाः सर्पा अनुष्टुप्। सूर्यप्रीत्यर्थे। ब्रह्मजज्ञानं प्रजापतिरादित्यस्त्रिष्टुप्। ब्रह्मप्रीतये०॥

अथ विनायकादिपञ्चानाम्। गणानां त्वा प्रजापतिर्गणपति-र्यजुः। गणपतिप्रीतये०। अम्बे अम्बिके प्रजापतिरश्वोऽनुष्टुप्। दुर्गाप्रीतये०। त्वां वा येति षण्णामाद्याया गृत्समदो द्वितीयायाः पुरुषढाजमीढौ तिसृणां प्रजापतिः षष्ठ्याश्च आङ्गिरसो वायु-र्द्वितीयाऽनुष्टुप् पञ्चमी त्रिष्टुप् शेषा गायत्र्यः। वायुप्रीतये। ऊर्ध्वा अस्य समिध इति द्वादशानां प्रजापतिरग्निरुष्णिक्। आकाश-प्रीतये। या वां कशा मेधातिथिरश्विनौ गायत्री। अश्विनोः प्रीतये॥

अथ दिक्पालानाम् । आशुः शिशान इति द्वादशर्चमैन्द्रं प्राग्वत् । अस्या जरास इति सप्तदशर्चमाग्नेयं प्राग्वत् । यमाय दध्यङ्ङाथर्वणो यमो यजुः । यमप्रीतये । यमाय स्वाहा । प्रणीतोदकस्पर्शः । असुन्वन्तमिति तृचस्य प्रजापतिरग्निस्त्रिष्टुप् । निर्ऋतिप्रीत्यर्थम् । प्रणीतोदकस्पर्शः । इमं मे वरुणेति द्वयोः शुनःशेपो वरुणो गायत्री त्रिष्टुभौ । वरुणप्रीतये । नियुत्वा त्वा यन्निति षडर्चं वायवीयं प्राग्वत् । आषाढमिति सौम्यचतुष्टयं प्राग्वत् । रुद्राध्यायः षट्त्रिंशन्मन्त्रावसानं प्राग्वत् ॥ ६६ ॥ प्रणीतोदकस्पर्शः । नमोऽस्तु सर्पेभ्य इति तृचमनन्तसूक्तं प्राग्वत् । ब्रह्मजज्ञानं प्रजापतिरादित्यस्त्रिष्टुप् । ब्रह्मप्रीतये ॥

अथ वस्वादीनां त्वमा वो देवा वसवस्त्रिष्टुप् । वसुप्रीतये । इमा गिरो गृत्समद आदित्यास्त्रिष्टुप् । आदित्यप्रीतये । रुद्राध्यायेणैन्द्रं प्राग्वत् । शुक्रज्योतिश्चेति षण्णां सप्तर्षयो मरुत आचतुर्थी वोष्णिक् पञ्चमी जगती शेषा गायत्र्यो मरुत्प्रीतये । आब्रह्मन् प्रजापतिर्ब्रह्मा यजुः । ब्रह्मप्रीतये । सहस्रशीर्षेति वैष्णवं प्राग्वत् । रुद्राध्यायो रौद्रं प्राग्वत् । विभ्राडिति सप्तदशर्चमार्कं प्राग्वत् । वनस्पते वीड्वङ्गः प्रजापतिर्वनस्पतिस्त्रिष्टुप् । वनस्पतिप्रीतये । ततो व्याहृतिहोमादिबलिहोमान्तयाजुषं पूर्णाहुतिप्राग्भावि कर्म कुर्यात् ॥

अथ सामगानां कुशकण्डिकानन्तरं प्रधानहोमे मन्त्राः । उदुत्यं प्रस्कण्वः सूर्यो गायत्री । तिलाज्यहोमे विनियोगः । उदुत्यं, सूर्याय स्वाहा । सं ते पयांसि सोमः सोमो गायत्री । अग्निर्मूर्द्धा वरुणः सोमो गायत्री । अग्ने विवस्वन्मण्डो जमदग्निर्बुधो बृहती । बृहस्पते परिदीया प्रतिरथो बृहस्पतिस्त्रिष्टुप् । शुक्रं ते भरद्वाजः शुक्रास्त्रिष्टुप् । शन्नो देवीः सिन्धुद्वीपः शनिर्गायत्री ।

कया नो वामदेवो राहुर्गायत्री । केतुं कृण्वन्मधुच्छन्दाः केतुर्गायत्री ॥

अथाधिदेवतानाम् । आवो राजानं वामदेवो रुद्रस्त्रिष्टुप् । आपो हिष्ठा सिन्धुद्वीप उमा गायत्री । स्योना पृथिवी मेधातिथिः स्कन्द उष्णिक् । इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री । त्वमित्सप्रथा गौतमो ब्रह्मा बृहती । इन्द्रमिद्देवता उक्तस्तुगिन्द्रस्त्रिष्टुप् । आयं गौः सार्पराज्ञी यमो गायत्री । ब्रह्मजज्ञानं ब्रह्मा कालस्त्रिष्टुप् । चित्र इच्छिशोश्चित्रगुप्तश्चित्रगुप्तो जगती ॥

अथ प्रत्यधिदेवतानाम् । अग्निं दूतं भरद्वाजोऽग्निर्गायत्री । उदुत्तमं गौतम आपस्त्रिष्टुप् । पृथिव्यन्तरिक्षं विष्णुपृथिव्युष्णिक् । सहस्रशीर्षा नारायणो विष्णुरनुष्टुप् । इन्द्रो वृषो वृधीय इन्द्रो गायत्री । एकाष्ठकी वसिष्ठ इन्द्राणी त्रिष्टुप् । प्रजापते न त्व हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् । तवेदिन्द्रावमं वसिष्ठः सर्पास्त्रिष्टुप् । एष प्रत्या प्रजापतिर्ब्रह्मा द्विपदा गायत्री ॥

अथ विनायकादिपञ्चानाम् । आतूनो गौरिवीतो गणपतिर्गायत्री । इमं स्तोमं कुत्सो दुर्गा जगती । राणाशिरीन्द्रो वायुरुष्णिक् । आदित्प्रत्नस्य निधनकाम आकाशो गायत्री । एषो उषा प्रस्कण्वोऽश्विनौ गायत्री ॥

अथ लोकपालानाम् । त्वामिद्धि भरद्वाज इन्द्रो बृहती । अग्निर्वृत्राणि श्रौतोऽग्निर्गायत्री । नाकेसुपर्णयमो यमस्त्रिष्टुप् । वेद्या हीत्यादित्यो निरृतिरुष्णिक् । इमं मे पुष्कभो वरुणो गायत्री । वा आत्रातु प्राजीने काशीतो वायुर्गायत्री । स्वादिष्टया गम्भीरः सोमो गायत्री । तद्रो गायत्री । तद्रो गाय रुद्र ईशानो गायत्री । समानो अध्वा उशना अनन्तास्त्रिष्टुप् । ब्रह्मजज्ञानं ब्रह्मा त्रिष्टुप् ।

अथ वस्वादीनाम् । तमग्नि नमस्वे वामदेवो वसवो विराट् । आदित्यैरिन्द्रभरद्वाज आदित्यो विराट् । आवो राजानं वामदेवो रुद्रस्त्रिष्टुप् । पवमाना असृक्षत आदा रसनधूमरुतो बृहती । ब्रह्मजज्ञानं ब्रह्मा त्रिष्टुप् । इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री । आ त्वा सोमस्य सोम ईशानो बृहती । इन्द्राय मद्वने गौरी वितको गायत्री । वनस्पते वीड्वङ्गो बाभ्रव्यो वनस्पतिस्त्रिष्टुप् । इति सामगानां होममन्त्राः।होममन्त्राश्च सामगानां जप्यानि सूक्तानि।विशेषस्तु ग्रहेषु सौम्ये प्रकीर्त्तितव्यमिति द्वादशर्चस्याद्यानां तिसृणां वाजस्त्रिष्टुप् । शेषाणामादित्यो गायत्री सोमो देवमा सोमप्रीत्यर्थे एकादशसामात्मिकायां रुद्रसंहितायाम् आवोराजानमिति वामदेवस्त्रिष्टुप्। तद्वो गायेति चतुःसाम्नो वर्गस्य रुद्रो गायत्री।त्रयाणामाज्यदोहसीम्ना वैश्वानरस्त्रिष्टुप् । त्रयाणां देवव्रतसाम्नां पूर्वमोरुद्रेसस्य विश्वेदेवा उत्कृतिः । सर्वेषां रुद्रो देवता । रुद्रप्रीत्यर्थम् । आ ४ वो ५ राजा ५७ एकादश ॥ सामात्मिकायां स्कन्दसंहितायाम् आमन्द्रैरिति त्रयाणां च प्र अनो विश्वा सुहव्यमिति त्रयाणां शक्त्यो बृहती । प्रसेनानीमिति त्रयाणां कुत्सस्त्रिष्टुप् । पवित्रं त इति द्वयोरादित्यो जगती । सर्वेषां स्कन्दो देवता । स्कन्दप्रीतये । आ ५ मं ५० द्रे ५२, ५० । नवसामात्मिकायां विष्णुसंहितायाम् । इदं विष्णुर्गायत्री । प्रसक्षस्य वृष्णयो त्रिष्णुर्जगती । प्रकाव्यमुशने इति वराहस्य वाजिस्त्रिष्टुप् । सहस्रशीर्षा षड्चगीतयोः पुरुषव्रतयोः पुरुषोऽनुष्टुप् । सर्वेषां विष्णुर्देवता। विष्णुप्रीत्यर्थम् । र ५६ मे ५ विष्णुः । विनायकस्य अदन्दोरिति दशसामात्मिकायां विनायकसंहितायाम् । अदर्दरिति द्वयो रुद्रद्रक्षस्त्रिष्टुप् । सुश्राणास इति द्वयोः पृथिवी । त्रिष्टुप् । आतून इति चतुःसामवर्गे आद्ययोर्गौरिवीत अन्त्ययोरपालवैणवश्चतुर्णां गायत्री । मृजय-

माणा इति द्वयोराद्यस्योक्ष्णोराद्योर्द्वितीयस्य वर्गस्य षष्ठस्याऽग्निर्बृहती । सर्वेषां विनायको देवता । विनायकप्रीत्यर्थम् ४ द ५६ ५ रुप ९ व ४॥ ० ॥

सोमस्य प्रकाव्यमुशनामिति प्राग्वत् । द्वादश । ईशानस्य रुद्राणामावो राजानमिति रुद्रसंहिता प्राग्वत्। अच्युतस्य वैष्णवीसंहिता प्राग्वत्। अन्येषां तु होममन्त्रा एवेति भट्टचरणाः, मदनोमापतिरूपनारायणदानसागराद्याः । येषां गीतिरस्ति ते गीतिसंहिता एव जप्या इत्यर्पितम्। एवञ्च सूक्तजपानन्तरं व्याहृतिहोमादिबार्हिजुडिकाहोमान्तं प्राग्भाविस्वशाखोक्तं सामवेदी कुर्यात् ॥

अथाथर्ववेदिनः । प्रधानहोमे मन्त्राः । विषासहिमथर्वादित्यो जगती । होमे विनियोगः । एवं सर्वत्र । शकधूममथर्वा सोमोऽनुष्टुप् । त्वया मन्यो भौमस्त्रिष्टुप् । यद्राजानो विभजन्त विष्णुः बुधः पङ्क्तिः। बृहस्पतिर्नो ब्रह्मा बृहस्पतिस्त्रिष्टुप् ॥ शुक्रोऽस्यथर्वा शुक्रोऽनुष्टुप् । सहस्रबाहुर्नारायणः शनिस्त्रिष्टुप् । दिव्यं चित्तं कौशिको राहुस्त्रिष्टुप् । यस्ते पृथुरथर्वा केतवस्त्रिष्टुप् ॥ ९ ॥

अथाधिदेवतानाम् । मा नो विदन् ब्रह्मा ईश्वरोऽनुष्टुप् । आद्रिहिष्ठा सिन्धुद्वीप उमा गायत्री । अग्निस्त्विमन्यो ब्रह्मा स्कन्दस्त्रिष्टुप् । प्रतद्विष्णुरथर्वा विष्णुर्गायत्री । ब्रह्मजज्ञानमथर्वा ब्रह्मा त्रिष्टुप् । इन्द्रं मे ब्राह्मेन्द्रोऽनुष्टुप् । यः प्रथमो ब्रह्मा यमस्त्रिष्टुप् । रोहितः कालोऽथर्वा कालोऽनुष्टुप् । यदाज्ञातं कौशिकश्चित्रगुप्तोऽनुष्टुप् ॥

अथ प्रत्यधिदेवतानाम् । सामस्त्वाग्ने ब्रह्मा त्रिष्टुप् । शन्नो देवी ब्रह्मा आपो गायत्री । भूमेर्मातर्ब्रह्मा भूमिरनुष्टुप् । इदं विष्णुरथर्वा विष्णुर्गायत्री । इन्द्रा जुषस्व ब्रह्मेन्द्रोऽनुष्टुप् ॥ प्रेतपादानथर्वेन्द्राण्यनुष्टुप् । नक्तं जातास्यथर्वा प्रजापतिरनुष्टुप् । स-

पांनुसर्पाथर्वा सर्पाः पङ्क्तिः । ये दिशामथर्वा ब्रह्मा त्रिष्टुप् ॥

अथ विनायकादिपञ्चानाम् । निर्लक्ष्म द्रविणोदा विनायकोऽनुष्टुप् । पृतनाजितमथर्वा दुर्गा त्रिष्टुप् । अन्तरिक्षे वायवे ब्रह्मा वायुरनुष्टुप् । शाम्यन्ताथर्वा आकाशस्त्रिष्टुप् । संवेत्रपथ्योऽङ्गिरा अश्विनावनुष्टुप् ॥

अथ दिक्पालानाम् । इन्द्रब्रह्मेन्द्र त्रिष्टुप् । अग्नेर्मन्वेति ब्रह्माग्निस्त्रिष्टुप् । परो मृत्युक्तब्रह्मा यमस्त्रिष्टुप् । अमितं तिर्चातिरथर्वा निर्ऋतिस्त्रिष्टुप् । ये पश्चाज्जुह्वयथर्वा वरुणस्त्रिष्टुप् । वायोः सवितुरथर्वा वायुस्त्रिष्टुप् । य उत्तरतो ब्रह्मा सोमस्त्रिष्टुप् । धाता ददात्वङ्गिरा ईशानो गायत्री । य अनन्तं वितमथर्वा अनन्तः पङ्क्तिः । ब्रह्मा परं युज्यताम् । अथर्वा ब्रह्मा त्रिष्टुप् ॥

अथ वस्वादीनाम् । यानवहवस्त ब्रह्मा वसवस्त्रिष्टुप् । आदित्यो ब्रह्मा आदित्यस्त्रिष्टुप् । रुद्रं जलाष ब्रह्मा रुद्रास्त्रिष्टुप् । मरुतामत्वेर्वा मरुतस्त्रिष्टुप् । इमा ब्रह्म ब्रह्मा ब्रह्मास्त्रिष्टुप् । तद्विष्णोर्ब्रह्मा गायत्री । रुद्रजाश्वब्रह्मेशस्त्रिष्टुप् । वत्सो विराजो ब्रह्माकास्त्रिष्टुप् । वनस्पते वीड्वङ्गोऽथर्वा वनस्पतिस्त्रिष्टुप् । इत्यथर्वविदो होममन्त्राः ॥

अथ सूक्तानि । विषासहिं साह्मा इति षण्णाम् । अथर्वा सूर्यो जगती । सूर्यप्रीतये जपे विनियोगः । एवमग्रेऽपि । शकधूममिति चतुर्णामथर्वा सोमोऽनुष्टुप् । त्वया मन्यो इति सप्तानां ब्रह्मा भौमस्त्रिष्टुप् । सोमस्याशो इति चतुर्णामथर्वा बुधोऽनुष्टुप् । भद्रादधिश्रेय इत्यस्य ब्रह्मा बृहस्पतिस्त्रिष्टुप् । १ शुक्रोऽसीसथर्वा शुक्रोऽनुष्टुप् । प्राणाय नम इति तिसृणां ब्रह्मा शनिस्त्रिष्टुप् । राहुराजानं ब्रह्मा राहुस्त्रिष्टुप् । यस्ते पृथुरिति तृचस्याथर्वा केतवः । आद्ययोरन्त्याऽनुष्टुप् ॥

अथाधिदेवतानाम् । मा नो विदन्निति चतसृणां ब्रह्मा रुद्र-स्त्रिष्टुप् । अग्निरिव मन्यो ब्रह्मास्कन्दस्त्रिष्टुप् । यत इन्द्रा इति पञ्चानामथर्वा विष्णुस्त्रिष्टुप् । अन्त्या गायत्री । विष्णुप्रीतये । ब्रह्मजज्ञानमिति सप्तानामथर्वा ब्रह्मा त्रिष्टुप् । इन्द्रो जयतीति तृचस्य ब्रह्मेन्द्रविष्णुस्त्रिष्टुप् । इन्द्रप्रीतये । यमो मृत्युरिति तृचस्य ब्रह्मा यमस्त्रिष्टुप् । यमप्रीतये । ओहितः काल इति द्वयोरथर्वा कालोऽनुष्टुप् । अथर्वाङ्परस्तादिति चतसृणाम् । अथर्वा चित्रगुप्तस्त्रिष्टुप् ॥

अथ प्रत्यधिदेवतानाम् । अग्नेर्मघ इति तृचस्य ब्रह्माग्निस्त्रिष्टुप् । शन्नो देवीति चतसृणां ब्रह्माऽऽपो गायत्री । सत्यं बृहदृतामिति ब्रह्मा क्षितिस्त्रिष्टुप् । यन्न इन्द्र इति पञ्चर्चं वैष्णवं प्राग्वत् ॥ इन्द्रा जुषस्वेत्येकस्य ब्रह्मेन्द्रोऽनुष्टुप् । प्रेत पादावित्यस्य अथर्वेन्द्राण्यनुष्टुप् । प्रजापते न त्वदिति द्वयोर्ब्रह्मा प्रजापतिस्त्रिष्टुप् । शेरभकेत्यष्टानाम् अथर्वा सर्पा पाङ्क्तिः । ब्रह्मजज्ञानमिति सप्तर्चं ब्राह्मं प्राग्वत् ॥

अथ विनायकादिपञ्चानाम् । निर्लक्ष्ममिति चतसृणां द्रविणोदा विनायकोऽनुष्टुप् । वायोः सवितुरिति द्वयोरथर्वा वायुस्त्रिष्टुप् । पुरं यो ब्रह्मण इति चतसृणां ब्रह्माकाशोऽनुष्टुप् । अश्विना ब्रह्मणेत्यस्य ब्रह्माऽश्विनौ त्रिष्टुप् ॥

अथ लोकपालानाम् । तत्रेन्द्राग्नियमानां त्रयस्तृचाः प्रागुक्ता एव । यस्यासो आसनीति तिसृणां ब्रह्मा निर्ऋतिस्त्रिष्टुप् । उदुत्तमं ब्रह्मा वरुणस्त्रिष्टुप् । वायोः सवितुरिति वायवीयो ऋचः प्राग्वत् । शकं धूममिति चतस्रः । सोमस्य मानो विदन्निति चतस्र ईशस्य शेजम्भकेत्यष्टानां, तस्य, ब्रह्मजज्ञानमिति ब्रह्मणः सप्त । एतानि पूर्ववत् । वस्वादित्यरुद्रमरुतां होममन्त्रा एव । ब्रह्म-

जज्ञानामिति सप्तब्रह्मणः । यम इन्द्र इति पञ्चाच्युतस्य मानोऽग्निदग्निति चतस्र ईशस्य विषासाहिमिति षडृचस्य । एतानि पूर्ववत् । वनस्पतेर्होममन्त्रा एव । ततः स्वस्वशाखीयं स्विष्टकृदभ्याधानहोमादि पूर्णाहुतिप्राग्भावि शेषं कर्म कुर्युः । ततो यजमानो मण्डपप्राग्द्वारकलशसमीपे त्रातारमिन्द्र इन्द्रास्त्रिष्टुप् । इन्द्रप्रीत्यर्थं बलिदाने विनियोगः । त्रातारमिन्द्रम् । इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकायामुं सदीपं माषभक्तबलिं समर्पयामि, न मम इति माषभक्तबलिं दत्वा, भो इन्द्र दिशं रक्ष, बलिं भक्ष, मम सकुटुम्बस्य आयुःकर्त्ता क्षेमकर्त्ता शुभकर्त्ता शान्तिकर्त्ता पुष्टिकर्त्ता तुष्टिकर्त्ता भवेति प्रार्थयेत् । एवमाग्नेय्यादिषु होमोक्तैरग्न्यादिमन्त्रैर्बलिदानं प्रार्थनं च । एवमधिदेवताप्रत्यधिदेवतासहितेभ्यः सूर्यादिग्रहेभ्योऽपि होमोक्तैस्तत्तन्मन्त्रैर्विनायकदुर्गावाय्वाकाशवास्तोष्पतिक्षेत्राधिपतिभ्यस्तत्तन्मन्त्रैर्होमोक्तैरेव । तत आचार्यो यजमानान्वारब्धः शुचिस्रुवेण द्विवारं चतुर्वारं वा नालिकेरादिफलयुक्तमाज्यं गृहीत्वा पूर्णाहुतिं जुहुयात् ॥ तत्र मन्त्राः । समुद्रा दूर्मिरिति तृचस्य गौतमो वामदेवोऽग्निस्त्रिष्टुप् । पूर्णाहुतौ विनियोगः । एवमग्रेऽपि विनियोगः । मूर्द्धानं दिवो भरद्वाजो वैश्वानरस्त्रिष्टुप् । पुनरग्निवसुरुद्रादित्यास्त्रिष्टुप् । पूर्णा दर्विविश्वेदेवाः शतक्रतुरनुष्टुप् । सप्त ते अग्ने सप्तवानाग्निर्जगती । धामं ते वामदेव आपो जगती । धामं ते स्वाहेति । यजमानस्तु इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवते अग्नयेऽद्भ्यश्च, न ममेति त्यजेत् । कातीयानां तु, मूर्द्धानं दिव इत्येव पूर्णाहुतिमन्त्रः । अग्नय इदं न ममेति त्यागः । सामगानां तु प्रजापतिऋषिर्गायत्रीछन्द इन्द्रो देवता । यशस्कामस्य यजनीयप्रयोगे विनियोगः । पूर्णहोमं यशसा जुहोमि योऽस्मै जुहोति वरमस्मै

ददाति । वरं वृणो यशसा भामि लोके स्वाहेत्यनेन स्रुवेणैव होमः। इन्द्राय इदं न ममेति त्यागः । ततो वसोर्धारया होष्यामीति सङ्कल्प्य यजमानो वसोर्द्धारां जुहुयात् । मन्त्रास्तु, अग्निमीळ इति नवानां मधुच्छन्दा अग्निर्गायत्री । वसोर्द्धारायां विनियोगः । विष्णोर्नु कमिति षण्णां दीर्घतमा विष्णुस्त्रिष्टुप् । आ ते पितरिति पञ्चदशानां गृत्समदो रुद्रस्त्रिष्टुप् । स्वादिष्ठयेति नवानां मधुच्छन्दः पवमानसोमो गायत्री । महीवैश्वानरसाम्नो वैश्वानर ऋषिर्वैश्वानरो देवता पथ्या बृहतीछन्दः । ज्येष्ठसाम्नो भरद्वाजऋषिर्वैश्वानरो देवता त्रिष्टुप्छन्दः । वसोर्धारायां विनियोगः । वसोर्धारा जुहोतीत्यनुवाकमपि पठन्ति शिष्टाः । वसोर्द्धाराहोमस्तु महादानजलाशयोत्सर्गादौ नास्तीति बह्वृचः । ततः पूर्णपात्रविमोकादि च यथाशास्त्रं समाप्य आचार्यसहिता ऋत्विजः सर्वौषधीभिरनुलिप्ताङ्गपत्नीपुत्रादिसहितं यजमानं स्वस्वशाखीयैर्मन्त्रैर्नवग्रहपीठसमीपस्थकुशोदकेन सम्पातकलशोदकेन च अभिषिञ्चेयुः पौराणैश्च । ते च, सुरास्त्वामभिषिञ्चन्तु ब्रह्माविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥ प्रद्युम्नश्चाऽनिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥ कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिश्च मातरः ॥ एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ॥ आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः । ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ॥ देवदानवगन्धर्वा यक्षराक्षसपन्नगाः । ऋषयो मनवो गावो देवमातर एव च ॥ देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः। अस्त्राणि सर्वशस्त्राणि राजानो

वाहनानि च ॥ औषधानि समस्तानि कालस्यावयवाश्च ये । सरितः सागराः शैलास्तीर्थानि जलदा नदाः ॥ एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ तच्छंयोरावृणीमह इति ॥

ततो यजमानः स्नात्वा शुक्लमाल्यगन्धाम्बरधर आचार्यादीन् सम्पूज्य तेभ्यो दक्षिणां दद्यात् । तत्राचार्याय धेनुः । ब्रह्मणे कृष्णोऽनड्वान् । एवं सदस्यर्त्विग्द्वारपालादिभ्यो यथाशक्ति । तथा, धेनुः शङ्खस्तथाऽनड्वान् हेम वासो हयः क्रमात् * कृष्णा गौरायसं छाग एता वै दक्षिणाः क्रमात् ॥ ग्रहानुद्दिश्य देयाः । ततः शक्त्या ब्राह्मणान् भोजयेत् । सङ्कल्पयेद्वाऽशक्तौ । ततो दीनाऽनाथेभ्यो भूयसीं दक्षिणां दद्यात् । मण्डलदेवतानां ग्रहपीठदेवतानां चोत्तरपूजां कृत्वा, यान्तु देवगणाः, अभ्यारमित इयो, उत्तिष्ठ ब्रह्मणस्पते इति उत्थाप्य विसृज्य मण्डपादीन् प्रतिमादींश्च सर्वान् सम्भारान् आचार्याय प्रतिपाद्य, यस्य स्मृत्या, प्रमादात् कुर्वतां कर्मेति पठित्वा कर्मेश्वरार्पणं कृत्वा विप्राशिषो गृहीत्वा तान्नमस्कृत्य सुहृद्युतो भुञ्जीतेति सर्वं शिवम् ॥ इति श्रीभट्टशङ्करात्मजनीलकण्ठकृते दानमयूखे दानपरिभाषाप्रयोगः ।

अथ दानानि ॥ मात्स्ये — अथातः सम्प्रवक्ष्यामीत्यादिना षोडशमहादानानि उक्तानि । यथा । आद्यं तु सर्वदानानां तुलापुरुषसंज्ञितम् । हिरण्यगर्भदानं च ब्रह्माण्डं तदनन्तरम् ॥ कल्पपादपदानं च गोसहस्रं च पञ्चमम् । हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च ॥ हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा । पञ्चलाङ्गलकं तद्वद्धरादानं तथैव च ॥ द्वादशं विश्वचक्रं च ततः कल्पलतात्मकम् । सप्तसागरदानं च रत्नधेनुस्तथैव च ॥ महाभूतघटस्तद्वत् षोडशः परिकीर्त्तितः ॥ तस्मादाराध्य गोविन्दमुमापतिविनायकौ । महादानमखं कुर्याद्विप्रैश्चैवानुमोदित इति ॥ तथा, षोडशारत्निमात्रं तु

दश द्वादश वा करान् । मण्डपं कारयेद्विद्वान् चतुर्भद्रासनं बुधः॥ भद्रासनानि द्वाराणीति केचित् । कुण्डसमीपान्यासनानीति परे । तथा, सप्तहस्ता भवेद्वेदी मध्ये पञ्चकराऽथवा । तन्मध्ये तोरणं कुर्यात् सारदारुमयं दृढम् । षोडशहस्तपक्षे सप्तहस्तदशद्वादशहस्तयोः पञ्चहस्तेति । सा च पूर्वैव निर्णीता । तस्यां मध्यगतप्राक्सूत्रे पूर्वपश्चिमयोः शाकेङ्गुदीदेवदारुश्रीपर्णीबिल्वकदम्बकाञ्चनादीनामन्यतमनिर्मितसप्तहस्तं चतुरस्रं स्तम्भद्वयम् । हस्तद्वयं भूमौ स्तम्भयोरन्तरालं तु हस्तचतुष्टयम् । तयोरुपरि हस्तमिता चूडा । हस्तमितं सक्त्वाऽच्छिद्रं वा कार्यम् । एवमुत्तरङ्गोऽपि स्तम्भसजातीयकाष्ठघटितः पञ्चहस्तः । तयोर्वितस्तिमात्रं त्यक्त्वा कृतबिलस्तम्भचूडयोर्वितस्तिमात्रः, स्वकराभ्यां वा स्तम्भबिलयोर्निवेशः । तदेतत्तोरणम् । उत्तरङ्गमध्येऽधोभागे लौहकटकमङ्कुशं वा कीलेन निवेश्य तदुत्तरकाष्ठात् षडङ्गुलावलम्बितुलावलम्बनाय । तुला तु पूर्वोक्ता काष्ठमयी दशाङ्गुलसूत्रवेष्टनस्थूला चतुर्भिः सार्द्धैर्वा चतुर्भिर्हस्तैर्दीर्घा वर्त्तुला प्रान्तयोर्मध्ये च षडङ्गुलोन्मिता चतुरस्रा कार्या । तस्यां च तुलावद्दीर्घं पदद्वयं चतुष्टयं वा निवेश्य तयोर्मध्ये च पदत्रयं षडङ्गुलं निवेश्य मध्ये चान्ये चतुर्विंशतिर्बन्धा निवेश्याः सौवर्णाढ्याः । तस्याः षडङ्गुलयोरन्तरयोरधोभागे वडिशाकृतिकटद्वयं निवेश्य तन्मध्ये चोर्ध्वभाग एकम् । ततस्ताम्रपलानां दशाष्टषट्शतैः क्रमात् पञ्चचतुःसार्द्धत्रिप्रादेशव्यासवर्त्तुले पञ्चचतुस्त्र्यङ्गुलोच्छ्रितान्विते ताम्रचतुर्वलयान्विते फलके लौहाभिस्त्रिहस्ताभिश्चतसृभिः शृङ्खलाभी रज्जुभिर्वर्त्तुलान्तयोरवलम्बयेत्। यथा फलकयोर्भूमेश्च वितस्तिमन्तरं भवति । हेमाद्रिरूपनारायणादिभिश्च काष्ठमये फलके उक्ते । तथा, कुर्यात् कुण्डानि चत्वारि चतुर्दिक्षु विचक्षणः॥ सुमेखलायोनियुतानि तानि सम्पूर्णकुम्भानि

सहासनानि * सुताम्रपात्रद्वयसंयुतानि सयज्ञपात्राणि सविष्टराणि॥ हस्तप्रमाणानि तिलाज्यपुष्पधूपोपहाराणि सुशोभनानि। पूर्वोत्तरे-हस्तमिताऽथ वेदी ग्रहादिदेवेश्वरपूजनाय ॥ विस्तारायामोच्छ्रायै-र्हस्तमितेति केचित्। वितस्त्युच्छ्रायेति हेमाद्रिः। तदुक्तं, गर्त्तस्यो-त्तरपूर्वेण वितस्तिद्वयविस्तृताम्। वप्रद्वययुतां वेदीं वितस्त्युच्छ्रा-यसंयुताम्॥ मात्स्ये, द्विरङ्गुलोच्छ्रितो वप्रः प्रथमः समुदाहृ-तः। अङ्गुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि ॥ द्व्यङ्गुलस्तत्र विस्ता-रः सर्वेषां कथितो बुधैरिति ॥ तथा, अनेन विधिना यस्तु तुला-पुरुषमाचरेत्। प्रतिलोकाधिपस्थाने प्रतिमन्वन्तरं वसेत् ॥ विमा-नेनार्कवर्णेन किङ्किणीजालमालिना। पूज्यमानोऽप्सरोभिश्च ततो विष्णुपुरं व्रजेत् ॥ कल्पकोटिशतं यावत्तस्मिँल्लोके महीयते ॥ कर्मक्षयादिह पुनर्भुवि राजराजो भूपालमौलिमणिरञ्जितपादपीठः * श्रद्धान्वितो भवति यज्ञसहस्रयाजी दीप्तप्रतापजितसर्वमहीपलोकः ॥ यो दीयमानमपि पश्यति भक्तियुक्तः कालान्तरे स्मरति वाचय-तीह लोके। यो वा शृणोति पठतीन्द्रसमानलोकं प्राप्नोति धाम स पुरन्दरदेवजुष्टमिति ॥

अथ तुलापुरुषदानप्रयोगः। अधिवासनात् पूर्वदिने कृतैक-भक्तादिरधिवासनादिने यजमानो देशकालौ सङ्कीर्त्य ब्रह्महत्या-दिसर्वपापनाशपूर्वकसर्वमन्वन्तरकालाऽवच्छिन्नसर्वलोकपालस्थाना-ऽधिकरणकवासोत्तरकालाऽप्सरोगणाऽधिष्ठितकालरणत्किङ्किणी-गणमण्डितार्कवर्णविमानकरणवैकुण्ठभुवनगमनानन्तकल्पकोटिश-तावधिपूजायुक्तविष्णुपुरवासोत्तराखिलभूपालमौलिमणिमाणिक्य-मालोपरञ्जितचरणपीठत्वविशेषितराजराजत्वश्रद्धानुविद्धयज्ञसहस्र-याजित्वप्रदीप्तप्रतापाशेषमहीपालविजयकामो विष्णुप्रीतिकामो वा श्वः तुलापुरुषदानमहं प्रतिपादयिष्य इति सङ्कल्प्य, एकस्यां

प्रतिमायां गोविन्दं, परायामुमापतिविनायकौ च गोविन्दाय नम उम पतिविनायकाभ्यां नम इति सम्पूज्य, विप्रत्रयं च सम्पूज्य, विप्राज्ञां गृहीत्वा, षोडशमातृः सप्तवसोर्धाराश्च संपूज्य, नान्दीश्राद्धपुण्याहवाचनगुर्वृत्विग्द्वारपालवरणतदीयमधुपर्कपूजनानि पूर्वाह्णे कृत्वाऽपराह्णे गुरुसहितो मण्डपपूजां कुर्यात् । तत ऋत्विजः प्रतिकुण्डमेकैकं कलशमपि पूर्वोक्तैर्मन्त्रैः स्थापयेयुः । कलशस्थापनं गुरुः कुर्यादिति परे । तत ऋत्विजः स्वस्वकुण्डेऽग्निं स्थापयेयुः । गुरुस्तु महावेद्यां षोडशारग्रहवेद्यां च सर्वतोभद्रं विलिख्य तद्देवतास्तस्यामेव वेद्यां प्रतिमासु वा सूर्यादिवनस्पत्यन्तैकपञ्चाशद्देवताश्च सम्पूज्य नवग्रहवेदिकलशस्थापनतदभिमन्त्रणानि प्राग्वत् कृत्वा सर्वकर्माध्यक्षतया तिष्ठेत् । ऋत्विजस्तु ग्रहादिहोमसूक्तजपद्वारा सूक्तपाठान् प्राग्वत् कृत्वा स्विष्टकृदादिपूर्णाहुतिप्राक्तनं कर्म कुर्युः । भूमिर्भूमिमगान्माता भूमिर्मातरमप्यगात् । भूयाम पुत्रैः पशुभिर्योऽस्मान् द्वेष्टि स भिद्यतामिति भूमिं स्पृशेत् । ततस्तोरणस्पर्शः । तुलायज्ञस्य पूर्वस्यां सुप्रभं नाम तोरणम् । महावीर्यं महाकायं सुवर्णसदृशप्रभम् ॥ अत्र द्वारे स्थितः शैलो माल्यवांश्च महाद्युतिः । एह्येहि सुप्रभ तोरण तुलायज्ञं रक्ष, विघ्नं नाशय । अग्निमीळ इत्याह्वानम् । दक्षिणाशां गतं यस्य भीमाख्यं नाम तोरणम्। महावीर्यं महाकायं भिन्नाञ्जनसमप्रभम्॥अत्र द्वारे स्थितः शैलो विन्ध्यो नाम महाचलः । एह्येहि भीमतोरणेत्यादि पूर्ववत् । इषे त्वेत्यावाहनम् । पश्चिमां दिशमाश्रित्य सुदंष्ट्रं नाम तोरणम् । द्वारि तत्र स्थितः शैलो गन्धमादनसंज्ञकः ॥ एह्येहि सुदंष्ट्रतोरणेत्यादि । अग्न आयाहीत्यावाहनम् । उत्तरस्यां दिशि तथा विकटं नाम तोरणम् । महावीर्यं महाकायं शुद्धस्फटिकसन्निभम् ॥ तत्र द्वारि स्थितः शैलो हिमवांश्च महाद्युतिः ॥ ए-

ह्येहि विकटतोरणेत्यादि, शन्नो देवीरित्याह्वानम् । पूर्वादिद्वार-नामानि— पूर्वद्वारं वितानं स्याद्दक्षिणं पुष्पकं भवेत् । पश्चिमं तु घनं नाम कामदं चोत्तरं स्मृतमिति ॥ तत, एह्येहि वितानद्वारेति तन्नामभिश्चतुर्द्वारावाहनं कार्यम् । अथ कुङ्कुमपुष्पधूपदीपनैवेद्य-बलीनादाय पूर्वभागे सुभद्राय ऋग्वेदमूर्त्तये इन्द्रदैवत्याय माल्य-वत्पर्वतसहिताय वितानाख्यपूर्वद्वाराश्रिताय द्वारपालसहिताय सु-प्रभनाम्ने ऽश्वत्थतोरणाय नम इति पूजयेद्बलिं च दद्यात् । दक्षिणे शोभनाय यजुर्वेदमूर्त्तये यमदैवत्याय विन्ध्यपर्वतयुताय पुष्पका-ऽऽख्यदक्षिणद्वारमाश्रिताय द्वारपालसहिताय भीमनाम्ने औदुम्बर-तोरणाय नम इति । पश्चिमे सुधर्माय सामवेदमूर्त्तये वरुणदैव-त्याय गन्धमादनसहिताय घननामपश्चिमद्वाराश्रिताय सुदंष्ट्रप्लक्ष-तोरणाय नम इति पूजयेत् । अथर्ववेदमूर्त्तये सोमदैवत्याय हिम-वत्पर्वतसहिताय कामदद्वारमाश्रिताय द्वारपालसहिताय विकटा-ऽऽख्यवटतोरणाय नम इति उत्तरे पूजयेत् । मण्डपस्तम्भेषु सर्वे-भ्यो देवेभ्यो नम इति पूजयेत् । वंशेषु किन्नरेभ्यो नमः । पृष्ठे पन्नगेभ्यो नमः । ततः क्षेत्रपालाय मण्डपाधः पूजयेद् बलिं दद्या-त् । कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः । शङ्कुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः ॥ ब्रह्मा नागश्च पूर्वादिशैले ध्वजनायकाः ॥ कुमुदसहिताय पूर्वध्वजाय नम इति गन्धादि दद्यात् । एवं कुमुदाक्षसहितायेत्यादिदशध्वजान् सदेवान् पूजयेत् । गुरुर्यजमान-सहितः पुष्पधूपौ माषभक्तबलिं चादाय तूर्यनादं कारयेन्मण्डप-पूर्वद्वारदेशे । एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधराऽमरेश । संवीज्यमानोऽप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते ॥ इतीन्द्रमावाह्य । इन्द्राय नम इति सम्पूज्य, इन्द्राय साङ्गाय सपरि-वाराय सायुधाय सशक्तिकाय एष पुष्पादिसहितो माषभक्त-

बलिर्न ममेतिबलिं दद्यात् । एवमाग्नेय्यादिष्वग्न्यादिभ्यः । मन्त्रास्तु- ॐम् एह्येहि सर्वाऽमरहव्यवाह मुनिप्रवीरैरभितोऽभिजुष्ट । तेजोवता लोकगणेन सार्द्धं ममाध्वरं रक्ष कवे नमस्ते ॥ एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चित दिव्यमूर्त्ते । शुभाशुभानन्दशुचामधीश शिवाय नः पाहि मखं नमस्ते ॥ एह्येहि रक्षोगणनायकस्त्वं विशालवेतालपिशाचसंघैः। ममाध्वरं पाहि शुभाऽधिनाथ लोकेश्वरस्त्वं भगवन्नमस्ते ॥ एह्येहि यज्ञे मम रक्षणाय मृगाऽधिरूढः सह सिद्धसंघैः । प्राणाधिपः कालकवेः सहाय गृहाण पूजां भगवन् नमस्ते ॥ एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धम् । सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते ॥ एह्येहि पातालधरामरेन्द्र नागाङ्गनाकिन्नरगीयमान । यक्षोरगेन्द्राऽमरलोकसार्द्धमनन्त रक्षाध्वरमस्मदीयम् ॥ एह्येहि विश्वाऽधिपते मुनीन्द्रलोकेन सार्द्धं पितृदेवताभिः । सर्वस्य धातास्यऽमितप्रभावो विशाध्वरं नः सततं शिवाय ॥ ततः पूर्वस्यां दिशि किञ्चिद्भूमिमुपलिप्य । त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च । ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वन्तु तानि मे ॥ देवदानवगन्धर्वा यक्षराक्षसपन्नगाः । ऋषयो मनवो गावो देवमातर एव च॥ एते ममाध्वरे रक्षां प्रकुर्वन्तु मुदान्विताः॥ब्रह्मा विष्णुश्च रुद्रश्च क्षेत्रपालो गणैः सह । रक्षन्तु मण्डपं सर्वे घ्नन्तु रक्षांसि सर्वतः॥ ॐ त्रैलोक्यस्थेभ्यः स्थावरेभ्यो भूतेभ्यो नमस्त्रैलोक्यस्थेभ्यश्चरेभ्यो भूतेभ्यो नमः । दानवेभ्यः, गन्धर्वेभ्यः, यक्षेभ्यः, राक्षसेभ्यः, पन्नगेभ्यः, ऋषिभ्यः, मनुष्येभ्यः, गोभ्यः, देवताभ्यः, ब्रह्मणे, विष्णवे, रुद्राय, क्षेत्रपालाय, गणेभ्यो नम इति संपूज्य माषभक्तबलिं दद्यात् । ततः साचार्यऋत्विक्को यजमानश्चरणौ प्रक्षाल्य वेद्यामुपविश्य षोडशारे तुलां संस्थाप्य तस्यां दक्षिणप्रा-

न्तादारभ्य सुवर्णादिधातुबन्धेषु सूत्रबन्धेषु वा चतुर्विंशतिदेवता आवाह्य पूजयेत्। ताश्च– ईशः, शशी, मारुतः, रुद्रः, सूर्यः, विश्वकर्मा, गुरुः, अङ्गिरोऽग्निः, प्रजापतिः, विश्वेदेवाः, जगद्विधाता, पर्जन्यशम्भु, पितृदेवताः, सौम्यः, धर्मः, अमरराजः, अश्विनौ, तुलेशः, मित्रावरुणौ, मरुद्गणः, धनेशः, गन्धर्वः, जलेशः, विष्णुरिति। ततस्तिसृषु प्रतिमासु गोविन्दसूर्यधर्मराजानावाह्य सम्पूज्य गोविन्दप्रतिमां द्वादशाङ्गुलमुक्तादाम्ना सुवर्णशृङ्खलया वा तुलामध्ये च लम्बयेत् । सूर्यधर्मराजौ तुलासमीप एव स्थाप्यौ । ततः सर्वे ऋत्विजः शान्तिं पठेयुः । ततो यजमानकृतस्याधिवासनसाङ्गतासिद्धये गुर्वृत्विग्जापकेभ्य इमां दक्षिणां सम्प्रदद इति शक्त्या दक्षिणां कुण्डलोपवीतकण्ठकाङ्गुलीयवासांसि च दद्यात्। द्विगुणां गुरवे। तद्दिने यजमानगुर्वृत्विग्द्वारपालान्। उपवासाशक्तो नक्तम्। जागरश्च नृत्यगीतादिना। एवं पूर्वेद्युरशक्तौ सद्यो वाऽधिवासनं कृत्वा परेद्युः कृतनित्यकर्मा यजमानः स्वस्ति वाचयेत्। ऋत्विजः पूर्ववत् स्वस्वकुण्डे पूर्णाहुतिं स्वशाखया जुहुयुः। कर्मशेषं समापयेयुश्च। अत्र ब्रह्मदक्षिणा पूर्णपात्ररूपा नास्ति । अधिवासनतुलाद्रव्यदानेनान्यत्सिद्धेरिति पितामहचरणानामाशयः । ततो ऋत्विजः पुत्रपत्नीयुतं यजमानं प्राङ्मुखमुखमुदङ्मुखं वा कुण्डद्वारग्रहसमीपस्थकलशोदकैरभिषिञ्चेयुः स्वस्वशाखीयैर्मन्त्रैः पौराणैश्च। ते तु प्रदर्शिताः, सुरास्त्वामिसादयः । यजमानस्तु सर्वौषध्यनुलिप्तः स्नात्वा शुक्लमाल्याम्बरः पुष्पाञ्जलिं गृहीत्वा सफलकां तोरणाऽवलम्बितां तुलां त्रिः प्रदक्षिणीकृत्य अनुमन्त्रयेत् । ॐ नमस्ते सर्वदेवानां शक्तिस्त्वं सत्यमाश्रिता। साक्षिभूता जगद्धात्री निर्मिता विश्वयोनिना ॥ एकतः सर्वसत्यानि तथाऽनृतशतानि च। धर्माधर्मकृतां मध्ये स्थापिताऽसि जगद्धिते ॥ त्वं तुले सर्वभूता-

नां प्रमाणमिह कीर्त्तिता । मां तोलयन्ती संसाराद्दुद्धरस्व नमोऽस्तु ते ॥ योऽसौ तत्त्वाधिपो देवः पुरुषः पञ्चविंशकः । स एषोऽधिष्ठितो देवि त्वयि तस्मान्नमोनमः ॥ ततः, नमो नमस्ते गोविन्द तुलापुरुषसंज्ञक। त्वं हरे तारयस्वस्मानस्मात् संसारसागरादिति ॥ तत्प्रतिमामनुमन्त्र्य सतुलं गोविन्दं संपूज्य पुनस्तं प्रदक्षिणीकृत्य सखड्गचर्मकवचालंकृतो हैमो धर्मराजसूर्यस्तयोर्वामदक्षिणकराभ्यामादाय तुलामध्यावलम्बितं गोविन्दं पश्येत् । तुलोत्तराशिक्य आरुह्योपविशेत् तत्र प्राङ्मुखः । मात्स्ये, ततोऽपरे तुलाभागे न्यसेयुर्द्विजपुङ्गवाः । समादभ्यधिकं यावत् काञ्चनं चातिनिर्मलम् ॥ पुष्टिकामस्तु कुर्वीत भूमिसंस्थं नराधिप ॥ यत्तु, पूर्वं द्रव्यन्यासः पश्चात्तदारोहणमिति गोपथे । तन्नानापुराणवचनविरोधादथर्वशाखीयविषयमिति दानसौख्यादौ । गोदोहं यावत्स्थित्वैतदुदीरयेत् । नमस्ते सर्वभूतानां साक्षिभूते सनातनि । पितामहेन देवि त्वं निर्मिता परमेष्ठिना ॥ त्वया धृतं जगत् सर्वं सह स्थावरजङ्गमम् । सर्वभूतात्मभूतेशे नमस्ते सर्वधारिणीति ॥ वह्निपुराणे तु मुहूर्त्तमात्रावस्थानमुक्त्वा, जपेन्मन्त्रांस्तु पौराणान् पुनन्तु नेति च तृचम् ॥ यथा पवित्रमतुलमपसं जातवेदसः । तथा स्वेन पवित्रेण सुवर्णं तु पुनातु माम् ॥ रुद्रस्य सुमहत्तेजः कार्त्तिकेयस्य सम्भवः । यथाग्निर्देवताः सर्वाः सुवर्णं च तदात्मकम् ॥ तथा, यत्कृतं मे स्वकायेन मनसा वचसा तथा । दुष्कृतं यत् सुवर्णस्थं यातु मुक्तिं परां शुभामिति ॥ मात्स्ये, ततोऽवतीर्य गुरवे पूर्वमर्द्धं निवेदयेत् । ऋत्विग्भ्योऽपरमर्द्धं च दद्यादुदकपूर्वकम् ॥ गुरवे ग्रामरत्नानि ऋत्विग्भ्यश्च निवेदयेत् ॥ अत्रेत्थं प्रयोगः । वेदिपश्चिमत उपविश्य सुवर्णादिकुशोदकेन प्रोक्ष्य जलाक्षतकुशानादाय मासपक्षतिथ्याद्युल्लिख्य एकैकमन्वन्तरकालेत्यादि राजराजत्वकामोऽहमिमन्तं

प्रागुक्तं महाप्रयोगमुक्त्वा पापक्षयकामो वा विष्णुप्रीतिकामो वे- साद्युल्लिख्यामुकगोत्रायामुकशर्मणे गुरवेऽमुकशर्मा इदं तुलापुरुष- सुवर्णार्द्धमग्निदैवतं संप्रददे, न ममेति गुरवेऽर्द्धं सुवर्णं दद्यात् ॥ एवमपरार्द्धमृत्विग्भ्यः । दानसागरादिमते तु वरणक्रमेणाचार्यकरा- ऽधः स्थितोत्तानकरेभ्यः सर्वेभ्यो युगपदेव गोत्राद्युच्चारपूर्वकमुत्सृज्य आचार्यादिभ्यो यथाविभागं प्रतिपादयेत् । अदक्षिणं तु यद्दानं त- त्सर्वं निष्फलं भवेदित्युक्तत्वादत्र दक्षिणापेक्षया गुरवे ग्रामरत्ना- दीति श्रुतं दक्षिणात्वेनान्वेति । ग्रामरत्नदक्षिणाऽपि क्षत्रिय- कर्त्तृके दाने । अन्यकर्त्तृके तु सुवर्णदक्षिणेति हेमाद्रिः । ततः पुन- र्मासाद्युल्लिख्य कृतैतत्तुलापुरुषमहादानप्रतिष्ठासिद्ध्यर्थं शतं सुवर्ण- दक्षिणाग्रामरत्नानि गुर्वृत्विग्भ्योऽहं सम्प्रददे इति तद्धस्ते जलं क्षिपेत् । पश्चादाचार्यादिभ्यो भागशः प्रतिपादयेत् ॥

रूपनारायणादयस्तु, गुरवेऽर्द्धदानानन्तरं सुवर्णमात्रं दक्षिणां दत्वा । पुनस्तेभ्योऽष्टऋत्विग्भ्योऽर्द्धदानानन्तरम् एकैकं सुवर्णं दक्षिणां दद्यादित्याहुः ॥

अन्ये तु, अन्येषामपि तुलाद्रव्यदानानुज्ञार्थं ग्रामरत्नानि नि- वेदयेत् । दक्षिणा तु, सर्वेषामेव दानानामिति सामान्यन्यायेन सुवर्णम् । तत्रापि संख्याकाङ्क्षायां, गोपथोक्तसहस्रसंख्यान्वयः । सोऽपि कृष्णलादिभिर्निर्वाह्य इत्याहुः ॥

अत्र दानसारे त्रयः पक्षाः । आद्येऽर्द्धे गुरवेऽर्द्धमृत्विग्भ्य इति । अत्र अदक्षिणं तु यद्दानं तत्सर्वं निष्फलं भवेदिति वचना- द्दक्षिणापेक्षायां गुरवे ग्रामरत्नादीत्युक्तम् । जापकेभ्यः पुनर- न्यद्द्रव्यं देयम् । तेषु ऋत्विक्त्वाभावात् । द्वितीयस्तु, प्राप्य तेषा- मनुज्ञातं तथाऽन्येभ्योऽपि दापयेदिति । तत्र गुरवे तुलाद्रव्यस्या- ऽर्द्धश्चतुर्थो वांशः । तुलाविकृतिभूते धरादाने धरार्द्धं चतुर्भागं गुरवे

तु निवेदयेदिति श्रुतमत्रापि परिमाणापेक्षयाऽन्वेति । सत्रोक्तेर्वा-द्विपादिव्यवस्था ज्योतिष्टोमे, येन वा तुष्यते गुरुरिति सामान्योक्तं वा । दीनानाथविशिष्टादींश्च पूजयेद् ब्राह्मणैः सहेत्यनेन तृतीयः पक्षः । तत्रापि गुरवे दाने द्वितीयपक्षोक्तैव व्यवस्थेति विशिष्टा ब्राह्मणा अपि । अनयोः पक्षयोर्जापकादिभ्योऽप्येतन्मध्यस्थसुवर्ण-दाने न क्षतिरिति । अत्र पक्षत्रयेऽपि, गुरवे ग्रामरत्नादि । स-र्वेषामेव दानानां सुवर्णं दक्षिणेष्यत इत्यादिनोक्तं सुवर्णमेव प्रत्येकं समुदायेन वा देयमिति ॥

मदनरत्ने गुर्वृत्विगनुज्ञयाऽन्येभ्योऽपि देयमिति द्वितीयपक्षे तुलाद्रव्यं त्रेधा विभज्यैकोंऽशो गुरवे देयोऽन्य ऋत्विग्भ्यः, परो द्वारपालेभ्यो दीनानाथेभ्यश्च । तृतीयपक्षे तु एतत्तुलितसुवर्णं गुरवे ऋत्विग्भ्यो द्वारजापकेभ्योऽन्येभ्यश्च दीनानाथेभ्यो ब्राह्मणेभ्यश्च दातुमहमुत्सृज्य इत्युत्सृज्य दद्यात् । सर्वपक्षे दक्षिणा गुर्वृत्विग्भ्य एव, नान्येभ्य इत्युक्तम् । अत्र प्रतिग्रहे ब्राह्मणे यजमाने सप्रणवं स्वस्तीति शब्दमुच्चैः पठेयुः । क्षत्रिये निरोङ्कारं मन्द्रम् । वैश्ये उपांशु । शूद्रे मनसा ॥ ततो द्रव्यं स्पृष्ट्वा स्वशाखोक्तां कामस्तुतिं पठेदिति रूपनारायणीये । अथर्वणानां तु, क इदं कस्मा अ-दात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता । कामः समुद्रमाविशत् कामेन त्वा प्रतिगृह्णामि कामैतत्ते भूमि-ष्ट्वा प्रतिगृह्णात्वन्तरिक्षमिदं महत् । माऽहं प्राणेन मात्मना प्रजया प्रतिगृह्य विराधिषीयेति । ततः सहस्रं विप्रान् भोजयेत् सङ्कल्पयेद् वा । ततः पुण्याहवाचनं कृत्वा स्थापितदेवतापूजनं कुर्याद् यजमानः । गुरुस्तु, यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् । इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय चेत्याद्युक्त्वा पीठा-दिदेवता विसर्जयेत् । ततो मण्डपादिसामग्रीम् । आचार्याय

प्रतिपादयामीत्युक्त्वा गुरुसात् कुर्यात् । मात्स्ये, न चिरं धारयेद् गेहे सुवर्णं प्रोक्षितं बुधः । तिष्ठद्भयावहं यस्माच्छोकव्याधिकरं नृणाम् ॥ शीघ्रं परस्वीकरणाच्छ्रेयः प्राप्नोति पुष्कलमिति ॥ इति तुलापुरुषदानविधिः ॥

अथ रजतादितुलाविधिः । भविष्योत्तरे, अनेनैव विधानेन केचिद्रूप्यमयं पुनः । कर्पूरेण तथेच्छन्ति केचिद् ब्राह्मणपुङ्गवाः ॥ अनेनेति मुख्यतुलापुरुषदानकथितेनेत्यर्थः । रजतादितुलापुरुषफलं च, यत्पापं स्वकुले जातं त्रिसप्तपुरुषैः कृतम् । तत् सर्वं नश्यते क्षिप्रमग्नौ तूलं यथा तथेत्यादिना गोपथब्राह्मणादौ पापविशेषक्षय-सूर्यलोकावाप्त्यादिरूपमुक्तम् । तथा सिततृतीयायां नार्यः सौ-भाग्यदास्तुलाम् । कुङ्कुमेन प्रयच्छन्ति लवणेन गुडेन वा ॥ न तत्र मन्त्रा होमो वा एवमेव प्रदापयेत् ॥ विश्वामित्रः, आदित्ये राहुणा ग्रस्ते सुवर्णैस्तोलयेत्तनुम् । सोमग्रहे तु रौप्येण यथा दानं तथा शृणु ॥ प्रवर्ग्यस्य मुखे युक्त उत्पन्नः पक्षिदेहतः । सर्वपापहरा-यैतद् ददामि प्रीयतां विधुः ॥ इत्युच्चार्य जलं त्वप्सु निक्षिपेद्द्विज-सत्तमः । प्रीयतां पितरः कांस्ये ताम्रे चैव पितामहः ॥ लवणे सिन्धुजे लक्ष्मीः प्रीयतां पार्वती गुडे । गन्धैर्गुडैर्वा वासोभिः सौ-भाग्यं लवणे परम् । प्रीयतां विश्वधात्रीति दानमन्त्रोऽभिधीयता-म्॥ तुलापुरुषतो राजन् याति तत्परमं पदम् । सर्वपापविशुद्धात्मा मुक्तिं यात्यपुनर्भवाम् ॥ अत्र सर्वपापहरायैतदभिप्रीयतां विधुरिति रूप्ये । पितरः प्रीयन्तामिति कांस्ये । गन्धगुडवासस्तुलायां पार्व-ती । लवणे विश्वधात्री । आत्मतुल्यं सुवर्णं वा रजतं रत्नमेव वा *यो ददाति द्विजाग्र्येभ्यस्तस्याप्येतत्फलं भवेदित्युक्तत्वात् रत्न-तुलायामपि सुवर्णतुलाफलमेव । इतिकर्त्तव्यताऽपि सैवेति केचि-त् ॥ इति रूप्यादितुलापुरुषः ॥

शिवात्मकम्। अस्य प्रदानाद् ब्रह्माद्याः शिवं ददतु पुष्कलम्। ताम्बूलस्य ॥ पूरितं पूगपूगेन नागवल्लीदलैरन्वितम्। चूर्णेन चूर्णपात्रेण कर्पूरपिटकेन च॥ सपूगखण्डनं दिव्यं गन्धर्वाप्सरसां प्रियम्। करक त्वं निरातङ्कं त्वत्प्रसादात् कुरुष्व माम्, ताम्बूलकरण्डस्य॥ लक्ष्मीप्रिया च लक्ष्मीदा लक्ष्मी च वसनप्रिया। सौभाग्यकृद्वरस्त्रीणां हरिद्रा श्रीप्रदाऽस्तु मे,हरिद्रायाः॥जरा नो जायते यस्मान्मण्डनं शुभकर्मसु । तस्माज्जीरकदानेन प्रीयतां गिरिजा मम, जीरकस्य ॥ कञ्चुकीवस्त्रयुग्मैश्च तथा कर्णावतंसकैः। कण्ठसूत्रैश्च भूषाभिः प्रीयतां निमिनन्दिनी, सौभाग्यद्रव्ययुक्तशूर्पस्य॥ रामपत्नि महाभागे पुण्यमूर्त्ति निरामये । गृहाणेमानि शूर्पाणि मया दत्तानि जानकि, शूर्पस्य ॥ नवग्रहदक्षिणादानमन्त्रा मात्स्ये। कपिले सर्वभूतानां पूजनीयाऽसि रोहिणि । सर्वतीर्थमयी यस्मादतः शान्तिं प्रयच्छ मे इति ॥

इति श्रीजगद्गुरुभट्टनारायणसूरिसूनुपण्डितशिरोरत्न-
मीमांसकशङ्करभट्टात्मजभट्टनीलकण्ठकृते
भगवन्तभास्करे दानमयूखः
षष्ठः ६ संपूर्णः ॥
शुभमस्तु ॥